THE

# PARIBHÁSHENDUŚEKHARA

OF

# NÁGOJÍBHAṬṬA

EDITED AND EXPLAINED

BY

F. KIELHORN, PH. D.,

SUPERINTENDENT OF SANSKRIT STUDIES IN DECCAN COLLEGE,

&c. &c. &c.

## Part I.

THE SANSKṚIT TEXT AND VARIOUS READINGS.



Bombay:

PRINTED AT THE "INDU-PRAKASH" PRESS.

DEDICATED

BY PERMISSION TO

THE HONOURABLE SIR A. GRANT BART.

M A. OXON., LL.D. EDIN,

DIRECTOR OF PUBLIC INSTRUCTION, BOMBAY,

VICE-CHANCELLOR OF THE BOMBAY UNIVERSITY,

MEMBER OF THE LEGISLATIVE COUNCIL OF

H. E. THE GOVERNOUR OF BOMBAY.

&c. &c. &c.

# PREFACE.

In preparing the text of this edition of Nágojíbhatta's Paribháshendus'ekhara I have used the following manuscripts, all written in the Devanágarí character:

1. An excellent Ms. of the text of the Paribháshendus'ekhara lent to me by Mr. Chintámani Shástrí Thatte; it was copied by Hari Shástrí, Mr. Chintámani Shástrí's brother, from the Ms. of his teacher. I have called it in my notes C.

2. Another Ms. of the text, belonging to Professor Bühler in Bombay. This Ms. which appears to be about forty years old, was copied, like C, by a Shástrí for his own use, but it is neither as well written nor as accurate; however it contains here and there on the margin short explanatory remarks. I have called it B.

3. Two Mss. of a commentary on the Paribháshendus'ekhara, called Paribháshendus'ekhara-kás'iká, composed by Vaidyanáthabhatta Páyagunda, the son of Mahádeva and Vení. One of these Mss. which belongs to myself, bears the date A. D. 1777; it becomes towards the end very incorrect, but as it was evidently copied by a conscientious, though ignorant, writer from a very correct Ms., most of its faults and inaccuracies

are easily corrected. The other Ms. at my disposal was kindly procured for me by Mr. Shankar P. Pandit; it appears to me to be about fifty years old and a copy from a Ms. derived from the same source as my own; Vaidyanáthabhatta's work is called in it Paribháshendus'ekhara-prakás'iká. I have named this commentary P.

4. A Ms. of the Paribháshendus'ekhara-vyákhyá composed by Bhairava, the son of Bhavadevamis'ra, belonging to and written by Mr. Chintámani Shástrí Thatte.

5. A Ms. of a commentary on the Paribháshendus'ekhara called Tripathagá, composed by Rághavendráchárya who, after having studied under Nílakantha Shástrí at Poona, went to Sattara where he became a teacher of great renown. He died about thirteen years ago near Benares.

In constituting my text of the Paribháshendus'ekhara I have followed the learned and accurate commentary of Vaidyanáthabhatta who was a pupil of Nágojíbhatta himself, and I have only in one or two instances, which have been indicated in my notes, considered it necessary to depart from it. Whenever the Mss. C and B differ from each other I have adopted C's reading, if supported by the authority of Vaidyanáthabhatta, and I have nearly always done the same in cases where he is silent, because I have found that Ms C agrees far more than B with Vaidyanáthabhatta's text. Only in a few passages have I thought it neces-

sary to quote Bhairava's and Rághavendráchárya's readings in my critical notes. I have verified throughout all references to the Mahábháshya and Kaiyaṭa's commentary on it, and have quoted both works, according to a Ms. lent to me by my kind friend Professor Buhler.

F. KIELHORN.

DECCAN COLLEGE,
11*th September* 1868.



॥ श्रीगणेशाय नमः ॥

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबो॰ाय परिभाषेन्दुशेखरम् ॥

प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्याय-॰द्धानि भाष्यवार्त्तिकयोर्निबद्धानि यानि परिभाषारूपाणि तानि व्याख्या-॰न्ते ॥

ननु लण् अ इ उण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु संदेहाद-॰र्णयो ऽत आह ।

## ॰याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् ॥ १ ॥

विशेषस्यान्यतरादर्थरूपस्य व्याख्यानाच्छिष्टकृतात्प्रतिपत्तिर्निश्चयो यतः ॰देहाच्छास्त्रमलक्षणमननुष्ठापकं न । शास्त्रस्य निर्णयजनकत्वै-॰त्यादित्यर्थः ॥ असंदिग्धानुष्ठानसिद्ध्यर्थे ऽत्र शास्त्रे संदिग्धोच्चारणरूपा-॰ार्यव्यवहारेण संदेहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति ॰ावत् ॥ तेनाणुदित्सवर्णस्य [१. १. ६९] इत्येतत्परिहाय पूर्वेणाण्ग्रहणं ॰रेणेण्ग्रहणमिति लण्सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह ।

## यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

## कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥

उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । अधिकरणसा-॰नश्चायम् ॥ यत्र देश उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्य

---

१. B. श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः ।

॰१. B. has हि before यतः, and the words न लक्षणमलक्षणम् तथा before न.

॰६. C. पक्षद्वयमित्याह; B. पक्षद्वयमाह.

गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः । देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते ॥ तत्तद्वाक्यार्थबोधे जाते भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेण संतुष्यद्यथाश्रुतग्राहिप्रतिपत्त्रपेक्षो ऽयं पक्ष इतीदन्सूत्रे [ १. १. ११ ] कैयटः । केचित्तु परिभाषाविषये तस्मिन् [ १. १. ६६ ] इत्यादिवाक्यार्थबोधे सप्तमीनिर्देशादि क्वेति पर्यालोचनायां सकलतद्विध्युपस्थितौ सकलतत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः । कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः ॥ एतदेवाभिप्रेत्याधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वशास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति षष्ठी स्थाने [ १. १. ४९ ] इति सूत्रे भाष्य उक्तम् ॥ अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते । कश्चित्परिभाषारूप इति कैयटः ॥ दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम् । एतच्च पक्षद्वयसाधारणं भाष्यं पक्षद्वये ऽपि प्रदेशैकवाक्यताया इट प्रतीतेः ॥ तत्रैवावान्तिविशेषः । यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावत्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम् । तदुक्तं क्ङिति च [ १. १. ५ इति सूत्रे कैयटेन । यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जत इति ॥ कार्यकाले तु तत्तद्विधिप्रदेशे

---

१. C. देशश्चोच्चारण°; B. देशश्चेहोच्चारण°.

६. C. सकलतद्विध्युपस्थितौ सकलतत्संस्काराय; P. सकलतद्वि°; B. सकलतत्तद्वि° सकलतत्तत्संस्का°.

९. C. and Bhâshya वेश्माभिज्वलयतीति; B. वेश्माद्यभिज्वलयतीति.

१३. B. °प्रकाश एवमेतद्बुद्धि°.

१३. C. °मिति तत्तात्पर्यम्; B. °मिति तात्पर्यम्.

१६. C. कैयटे.

१७. C. कार्यकालपक्षे तु.

परिभाषावृद्ध्यैकवाक्यतेति। अत्रैकदेशस्थ इत्यनेन तत्रतत्र तत्तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति यथा व्यवहर्तृणां कार्यार्थमनेकदेशगमने ऽपि न तत्तद्देशीयत्वव्यवहारः किंत्वभिजनदेशीयत्वव्यवहार एव तद्वत्। निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः क्विति चेत्यत्र भाष्ये। तत्रैकवाक्यता पर्युदासन्यायेन। प्रसज्यप्रतिषेधे ऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः॥ संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः किंतु प्रदेशवाक्यार्थेन सहैव। अत एवाणो ऽप्रगृह्यस्य [८. ४. ५७] इत्येतदेकवाक्यतापन्नादसो मात् [१. १. १२] इत्येतत्प्रति न मुत्वाद्यसिद्धमसिद्धत्वस्य कार्यार्थतया कार्यज्ञानोत्तरमेव प्रवृत्तिः कार्यज्ञानं च प्रदेशदेश एवेति तद्देशस्थस्यासिद्धत्वात्पूर्वग्रहणेनाग्रहणात्। एवं तद्बोधोत्तरमेव विरोधप्रतिसंधानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम्। अत एव कार्यकालपक्षे ऽयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसो मात् [१. १. १२] इति सूत्रे भाष्य उक्तम्॥ आकडाराधिकारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बाध्यबाधकभावः। पदादिसंज्ञानां तत्रजातशक्तिग्रहणेनैव त्रिपाद्यामपि व्यवहारः। अत एव पूर्वत्रासिद्धम् [८. २. १] इति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्ति-

२. B. °द्देशस्थं.

३. C. तत्तद्देशीयत्वव्यवहारः; B. तद्देशीयव्यवहारः.

८. C. प्रदेशवाक्येन.

९. C. °सिद्धत्वात्पूर्व°; B. °सिद्धत्वेन पूर्व°.

१७. B. विप्रषेधप्रवृत्तौ.

१९. C. इति सूत्रे भाष्ये; B. om. सूत्रे.

२०. C. °भपदसंज्ञादिविषये; B. C. °भपदसंज्ञाविषये.

माशङ्क्य कार्यकालपक्षाश्रयेण समाहितमित्याहुः ॥ यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥ कार्यकालमित्यस्य च कार्येण काल्यते स्वसंनिधिं प्राप्यत इत्यर्थः । कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत् ॥ अत एव पूर्वत्रासिद्धम् [ ८. २. १ ] इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम् ॥ न च कार्यकालपक्षे ङमो ह्रस्वात् [ ८. ३. ३२ ] इत्यादौ तस्मादित्युत्तरस्य [ १. १. ६७ ] तस्मिन्निति निर्दिष्टे पूर्वस्य [ १. १. ६६ ] इति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति तस्मिन्निति सूत्रस्थभाष्यासंगतिः । उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासंगत्यापत्तेः । स्पष्टं चेदमिको गुण [ १. १. ३ ] इत्यत्र कैयट इति वाच्यम् ॥ विप्रतिषेधे सूत्रे ऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । न हि कार्यकालपक्ष इत्येतावता तदपैति पक्षद्वये ऽपि प्रदेशेषु स्वबुद्धिजननाविशेषात् । न हि तत्पक्षे ऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति । नाप्यस्मदादिबुद्धिजन

---

१. C. °पक्षाश्रयेण; B. °पक्षाश्रयणेन.

१. B. inserts after °त्याहुः the words स्पष्टं चेदं क्ङिति चे सूत्रे कैयटे; these words are neither in C. nor in

२. C. कार्यकालमित्यस्य; B. कार्यकाल इत्यस्य.

३. C. °चिह्नितपरिभाषा °; B. °चिह्नितसंज्ञापरिभाषा°.

८. C. °स्थितमिदं द्रष्टव्य°.

१२. C. °संगत्यापत्तेः; B. °संगतेः.

१४. C. °परत्वस्याश्रयणे°; B. ° परत्वाश्रयणे°.

स्वदेशत्यागो भवति । अत एव भाष्य एकदेशस्थस्यैव सर्वशा- ाभिज्वालकत्वमुक्तम् । अत एव तस्मिन्निति सूत्रे कैयटः । सूत्रपाठा- ाया. परत्वस्य व्यवस्थापकत्वमिति । इको गुणेति सूत्रस्थकैयटस्तु न्त्य एव ॥ अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थ- त क्वापि परत्वं न स्यात् ॥ किंच क्ङिति चेति सूत्रस्थकैयटरीत्या धिसूत्राणा यथोद्देशपक्षे परिभाषादेशे संनिधानेन तेषां परत्वं व्याह- त । एवं च वृक्षेभ्य इत्यत्र सुपि च [ ७. ३. १०२ ] इत्यतः परत्वा- वचने झल्येत् [ ७. ३. १०३ ] इत्येत्त्वमित्याद्युच्छिद्येतेत्यलम् ॥ ३ ॥

इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसंदेह आह ।

## अनेकान्ता अनुबन्धा इति ॥ ४ ॥

अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः स कदाचित्तत्रोपलभ्यत । अयं तु न तथा तदर्थभूते विधेये कदाप्यदर्शनात् ॥ शित्किदित्या- समीपे ऽवयवत्वारोपेण समासो बोध्यः । वुञ्छण्कठ [ ४. २. ८० ] यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णेयम् । हल- म् [ १. ३. ३ ] इत्यत्रान्त्यशब्दः परसमीपबोधकः ॥ वस्तुतस्तु

## एकान्ताः ॥ ५ ॥

इत्येव न्याय्यम् । शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनव- वो हि काकादिरेकजातीयसंबन्धेन गृहवृक्षादिषूपलभ्यते नैवमयम् ॥ वं हि बहुव्रीहिरपि न्यायत एवोपपन्नः । अन्त्यशब्दे लक्षणा च न। कचानवयवत्वे णशकप्रत्ययादौ णादेरित्त्वानापत्तिः प्रत्ययादित्वाभावात् ।

---

१. C. सर्वशास्त्राभि°; B. सर्वत्राभि°.

९. C. °संदेह आह; B. °संदेहो ऽत आह.

१७. C. शास्त्रे तत्रवत्रोपलम्भा°.

१९. B. P. एवं हि; C. om. हि and एव.

२०. C. कार्येति°

दञ्चश्चकारस्य वैयर्थ्यापत्तेश्च । इदं च तस्य लोपः [१.३.९] इत्यत्र भाष्ये स्पष्टम् । तत्र ह्युक्तमेकान्ता अनुबन्धा इत्येव न्याय्यमिति दिक् ॥ ५

नन्वेकान्तत्वे ऽनेकाल्त्वादेवौशादीनां सर्वादेशत्वसिद्ध्यानेकाल्शित् [१. १. ५५] शिद्ग्रहणं व्यर्थमत आह ।

नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

शिद्ग्रहणमेवैतज्ज्ञापकम् । तेनार्वणस्तृ [६.४.१२७] इत्यादेर्न सर्वादेशत्वम् । ङादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्त्सिद्धम् ॥ ६ ॥

नन्वेवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्त्वे कृते ऽदाप् [१.१.२०] इति घुसंज्ञाप्रतिषेधो न स्याद्दैपः पकारसत्त्वे ऽनेजन्तत्वादात्त्वाप्राप्त्या पलोपोत्तरं पकाराभावेनास्य दाप्रूपत्वाभावादत आह ।

नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

उदीचां माङः [३.४.१९] इति निर्देशो ऽस्या ज्ञापकः । आदेच उपदेशे [६.१. ४५] इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्त्व क्रियमाणे ङकारसत्त्व एजन्तत्वाभावादात्त्वाप्राप्तेस्तस्यासंगतिः ॥ न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्त्वम् । तत्र धातोः [६. १. ८] इत्यस्य निवृत्ते

१. C. व्यर्थत्वापत्तेश्च ।.

१. C. इत्यत्र भाष्ये; B. om. अत्र.

६. C. शिद्ग्रहणमेवैतज्ज्ञापकम्; B. शित्करणमेव ज्ञापकम्.

७. B. °नुबन्धस्यैवाभावे°.

१०. C. °प्रतिषेधो न; B. °निषेधो न.

१०. C. °सत्त्वे ऽनेजन्तत्वादात्त्वाप्राप्त्या; B. °सत्त्वेनैजन्तत्वाभावादात्त्वाप्राप्त्या.

११. C. दाप्रूपत्वाभावाद°; B. दात्वाभावाद°.

१५. B. C. P. तस्यासंगतिः; according to P. some read तस्

एऽन्यत्र विस्तरः ॥ स्पष्टं चेदं दाधा घ्वदाप् [ १.१.२० ] इति सूत्रे द्भाष्ये ॥ ७ ॥

नन्वेवमपि वासरूपः [ ३.१. ९४ ] इति सूत्रेण कविषये ऽणो ऽप्याप-रेत्यत आह ।

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

ददातिदधात्योर्विभाषा [ ३.१. १३९ ] इति णबाधकशस्य विकल्पवि-धायकमस्या ज्ञापकम् ॥ तेन गोद इत्यादौ नाण्णिति वासरूपसूत्रे भाष्ये स्पष्टम् ॥ ८ ॥

ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्प्रकरणस्याभिधानियामक-सिद्धात्कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति न्यायात् । अस्ति च कृते बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम् । न तु लोकप्र-सिद्धैकद्व्यादीनामित्यत आह ।

## उभयगतिरिह भवति ॥ ९ ॥

इह शास्त्रे । संख्याया अतिशदन्तायाः [ ५.१.२२ ] इति निषेधो ऽस्या ज्ञापकः । न हि कृत्रिमा संख्या त्यन्ता शदन्ता चास्ति ॥ तेन कर्तरि कर्म-व्यतिहारे [ १.३.१४ ] कण्वमेघेभ्यः करणे [ ३.१.१७ ] विप्रतिषिद्धं चानधि-करण [ २.४.१३ ] इत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः ॥ तत्र कोभयगतिः काकृत्रिमस्यैव क कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम् ।

---

३. C. न चैवमपि.

९. C. °ग्रहणे; B. °ग्रहणेन.

१२. C. °दीनामित्यत आह ।; B. °दीनामत आह ।.

१५. C. वास्ति.

१७. C. om. द्रव्य.

१८. B. लक्ष्यानुव्याख्यान°.

अत एवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहणं न तु द्विस्त्रिर्घुष्टमात्रस्य ॥ ए चेदं संख्यासंज्ञासूत्रे भाष्ये ॥ यत्तु संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनै एवेति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजमिति तन्न । तेषामगृहीतशक्ति ग्राहकत्वेन विधित्वे संभवति नियमत्वायोगात् । सर्वे सर्वार्थवाचका इत्य पगमोऽपि योगिदृष्ट्या न त्वस्मद्दृष्ट्या विशिष्य सर्वशब्दार्थज्ञानस्याशक त्वात्सामान्यज्ञानं तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ९ ॥

नन्वध्येता शयितेत्यादाविङ्शीङोर्ङित्त्वाद्गुणनिषेधः स्यादत आह ।

## कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते ॥ १०

स्थण्डिलाच्छयितरि [ ४. २. १५ ] इति निर्देशश्चास्या ज्ञापकः ऊर्णुनविषतीत्यादिसिद्धये कार्यमनुभवन्निति । अत्र हि द्विर्वचनेऽ [ १. १. ५९ ] इति नुशब्दस्य द्वित्वम् । अन्यथा सन्यङोः [ ६. १. इत्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेनेसो द्वित्वनिमित्तत्वाभावात्तत्प्र त्तिर्न स्यात् ॥ वस्तुतः समवायिकारणनिमित्तकारणयोर्भेदस्य सकलले कतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या । अ

---

१. C. द्विस्त्रिर्घु°; B. द्वित्रिर्घु°.

२. B om. संख्या.

४. C. नियमत्वायोगात्; B. नियमार्थत्वायोगात्.

५. C. P. न त्वस्मद्दृष्ट्या; B. नास्मद्दृष्ट्या.

५ C. विशिष्टसर्व°

७. P. mentions the reading शयित इत्या°.

८. C. om. हि.

९. C. P. निर्देशश्चास्या; B. निर्देशोऽस्या.

१२. C. षष्ठीत्वात्स°.

१४. C. ज्ञापकसिद्धा; B. P. ज्ञापकसाध्या.

एव ।हि: प्रयुक्तः । स हि तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्वम् ॥ द्विर्वचने ऽचि [१. १. ५९] इत्यत्र भाष्ये ध्वनितैषा ॥ १० ॥

ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह ।

## यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितो ऽस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थः । तत्र द्गुणीभूता इत्यंशो बीजकथनम् । लोके ऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते ॥ यमुद्दिश्य विहित इत्युक्तेः प्रनिरयतीत्यादौ न दारित्यस्य घुत्वम् ॥ आने मुक् [७. २. ८२] इति ग्विधानसामर्थ्यादेषानित्या । अन्यथा पचमान इत्यादावकारस्य मुक्यनया रिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेव । तेन दिदीय इत्यादौ णादि न जहारेत्यादावात औ णलः [७. १. ३४] इति न ॥ न वाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम् । वचनेनावयवत्वबोनात् । तस्य चावयवत्वसादृश्ये पर्यवसानं बोध्यम् ॥ न चोक्तज्ञापकाद्वर्णग्रहणे ऽस्या अप्रवृत्तिरिति वाच्यम् । आने मुक् [७. २. ८२] इति सूत्रे

---

१ C. स हिस्तत्त्वेना°.

१ C. om. इति तत्त्वम्.

२ C. इत्यत्र भाष्ये; B. इति सूत्रे भाष्ये.

८ P. mentions the reading तद्गुणीभूतः.

९ C. देवदत्तस्य देवदत्त°.

१३ C. P. इति न; B. इति च न.

१५ C. °ज्ञापकेन वर्ण°.

भाष्ये ऽकारस्याङ्गावयवस्य मुगित्यर्थे पचमान इत्यत्र तास्यनुदात्तेत् [६. १. १८६] इति स्वरो न स्यादित्याशङ्क्यादुपदेशभक्तस्तद्ग्रहणेन ग्रहीष्यत इत्युक्तेरसंगत्यापत्तेः ॥ किंच ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमु डित्यर्थे कुर्वन्नास्त इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य यद गमा इति न्यायेनाद्यनस्यापि पदान्तग्रहणेन ग्रहणात्पदान्तस्य [८. ४. ३७] इति निषेध इत्यनया परिभाषयागमानामागमिधर्मवैशिष्ट्यमा बोध्यत इत्याशयकङमुट्सूत्र–[८. ३. ३२]–स्थभाष्यासंगतेः ॥ किं गुणादे रपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्यम् । अन्यथर्कारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात् । तच्च वर्णग्रहण एतदप्रवृत्तौ व संगच्छते । अत एव रदाभ्याम् [८. २. ४२] इति सूत्रे भाष्यं गुणो भव वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञको ऽभिनिर्वर्तत इति ॥ अत एव ने [७. २. ४] णेरनिटि [६. ४. ५१] इत्यादि चरितार्थम् ॥ अना मकानां सागमका आदेशा इत्यस्य त्वयमर्थः । आर्धधातुकस्येडागम इत्य ज्ञाते नित्येषु शब्देष्वागमविधानानुपपत्त्यार्थापत्तिमूलकवाक्यान्तरकल्पने ड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति । एवं चादेशेष्विवात्रापि बुद्धिविपरि णाम इति न नित्यत्वहानिः । स्थानिवत्सूत्रे च नेदृशादेशग्रहणं साक्षादष्ट ध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् । किंचैवं सति स्थानिबुद्धौ

---

२ C. P. ग्रहीष्यते; B. ग्राहिष्यते, mentioned by P.

५ C. P. °द्यनस्यापि; B. °द्यनकारस्यापि.

६ C. णत्वनिषेधो ऽनया; B. निषेधो ऽनया; P. निषेध इत्यनया; P. mentions the reading °नया च परिभाषया°.

७ B. C. °संगतेश्च; P. °संगतेः.

१० C. P. भाष्यम्; B. भाष्ये.

१७ C. om. सति.

कार्यप्रवृत्त्या निर्दिश्यमानस्य [प० १२] इति परिभाषाया अप्राप्त्याडागमस्त- [त्वे]तस्य पिबाद्यादेशापत्त्या लावस्थायामाडिति भाष्योक्तसिद्धान्तासंगतिः।

[स्था]निवद्भावविषये निर्दिश्यमानस्येति परिभाषायाः प्रवृत्तौ तिसृणामित्यत्र पर- [त्वा]त्तिस्रादेशो स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधान- [प]रभाष्यासंगतिः ॥ एङः [३. ४. ८६] इत्यादौ स्थानषष्ठीनिर्देशात्तदन्त- [ता]तया पठितवाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात्तस्य स्था- [नि]वत्सूत्रग्रहणेन न दोषः। आनुमानिकस्थान्यादेशभावकल्पने ऽपि श्रौत- [स्]थान्यादेशभावस्य न त्याग इत्यचः परस्मिन् [१.१.५७] इत्यादेर्नासंगतिः। [ए]तेन यदागमा इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् ॥ एतत्सर्वं [दा]धा घ्वदाप् [१. १. २०] इति सूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

नन्वेवमुदस्थादित्यादावुदः स्थास्तम्भोः पूर्वस्य [८. ४. ६१] इ... र्थापत्तिरत आह।

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

[ष]से षष्ठी स्थानेयोगा [१.१.४९] इति सूत्रमावर्तते। तत्र द्वितीयस्यायमर्थः। [ष]ष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणमुच्चार्यमाणसजातीयमेव निर्दिश्यमानावय- [व]रूपमेव वा स्थानेन स्थाननिरूपितसंबन्धेन युज्यते न प्रतीयमानमिति तेनेदं [सि]द्धम् ॥ न चास्य च्वौ [७.४.३२] इत्यादौ दीर्घाणामादेशानापत्तिस्तेषां [नि]र्दिश्यमानत्वाभावादिति वाच्यम्। जातिपक्षे दोषाभावात् ॥ किंच न [भू]सुधियोः [६. ४. ८५] इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमा-

१ C. P. अप्राप्त्याडा°; B. अप्रवृत्त्याडा°.

३ C. परिभाषाप्रवृत्तौ.

७ C. °सूत्रे ग्रहणेन.

१५ C. P. °मुच्चार्यमाणमुच्चार्यमाणस°; B. °मुच्चार्यमाणस°.

१६ P. °मिति तेनेदं; B. C. °मित्यर्थस्तेनेदं.

नकार्यबोधनान्न दोषः ॥ इयङुवङोर्ङित्त्वं त्विवर्णोवर्णान्तधातुश्नुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय । रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमेव । एतेनेदं ङित्त्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तं । इत्या हयवरट्सूत्रस्थेनायोगवाहानामुपदेशे ऽलो ऽन्त्यविधिः प्रयोजनम् । शाश वृक्षस्तत्र । नैतदस्ति प्रयोजनं निर्दिश्यमानस्यैव सिद्धमिति भाष्येण विर धात् ॥ अनया परिभाषया येन विधिः [१. १. ७२] इति सूत्रबोधिततदह । न्तस्य स्थानित्वाभावबोधनं यदागमाः [प° ११] इति लब्धस्य च । तेसुपद उदस्थादित्यादिसिद्धिः ॥ अनया च स्वस्वनिमित्तसंनिधापितानामलो ऽन्त्यस्य [१. १. ५२] इत्यादीनां समावेश एव न बाध्यबाधकभावो विप्रकधाभावात् । नाप्येतयोरङ्गाङ्गिभाव उभयोरापि परार्थत्वेन तदयोगात् । नेऽनेकाल्शित् [१. १. ५५] इति सूत्रे सर्वस्यैतत्परिभाषाबोधित एव गृह्यते १. यत्त्वादेः परस्य [१. १. ५४] अलो ऽन्त्यस्य [१. १. ५२] इत्यताभ्यां तत्प्र तद्बाधकाविति तन्न । उदस्थादिति सूत्रविषये ऽस्याः पादः पत् [६. ४. १३०] इति सूत्रे भाष्ये संचारितत्वात् । नाप्येतयोरियं बाधिका । एतयो निर्विषयत्वप्रसङ्गादिति ति विंशतेः [६. ४. १४२] इति सूत्रे कैयटः अकाज्विषये नायं न्यायः स्थानिवद्भावेनेव तन्मध्यपतितन्यायेन तद्बुद्धौ कार्यजननात् ॥ इयं चावयवषष्ठीविषये ऽपि । अत एव तदोः सः [७. २. १०६] इति सत्वमतिस्य इत्यत्रोपसर्गतकारस्य न । निर्दिश्यमनयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयो न त्वतियूयमित्यादौ सोपसर्गावयव

१ B. C. °श्नुधातुभ्रुवामित्यर्थेन; P. °धातुश्नुभ्रुवा°.

४ B. C. °योगवहानामुपदेशे.

५ C. सिद्ध इति; B. भाष्येण सह.

१० C. नाप्यङ्गाङ्गिभाव; B. नाप्येतयोरङ्गाङ्गिभाव.

१९ C. °युष्मदाद्यवयव°; B. °युष्मदस्मदवयव°.

मपर्यन्तस्येति बोध्यम् ॥ पादः पत् [६. ४. १३०] इति सूत्रे षष्ठी स्थाने [१. १. ४९] इति सूत्रे च भाष्ये स्पष्टैषा ॥ १२ ॥

ननु चेतेत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारो ऽपि स्यादत आह ।

## यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ १३ ॥

अनेकविधं स्थानार्थगुणप्रमाणकृतम् ॥ अत्र मानं षष्ठी स्थाने [१. १. ] इत्यत एकदेशानुवृत्त्या स्थानेग्रहणे ऽनुवर्तमाने पुनः स्थाने ऽन्तर- ः [१. १. ५०] इति सूत्रे स्थानेग्रहणमेव । तद्धि तृतीयया विपरिणमय्य क्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति संभवे स्थानत एवान्तरतम र्थकम् । तमब्ग्रहणमेवानेकविधान्तर्यसत्तागमकम् । स्थानतः स्थानेने- र्थः ॥ तत्र स्थानत आन्तर्यमिको यण्णचि [ ६. १. ७७ ] इत्यादौ सिद्धमेव ॥ अर्थतः पद्दत् [६. १. ६३] इत्यादौ । स्थान्यर्थाभिधानसम- स्यैवादेशतेति सिद्धान्तात्तदर्थाभिधानसमर्थो यः स तस्यादेश इति समानार्थतत्समानवर्णपादादीनां ते । तृज्वत्क्रोष्टुः [७. १. ९५] इति ॥ गुणतो वाग्घरिरित्यादौ ॥ प्रमाणतो ऽदसो ऽसेः [ ८. २. ८० ] त्यादौ ॥ स्थाने ऽन्तरतमसूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥

ननु प्रौढवानित्यत्र प्रादूहोढ [६. १. ८९. ३.] इति वृद्धिः स्यादत ाह ।

---

B. स्थानेग्रहणमनु°.

C. P. विपरिणमय्य; B. विपरिणम्य; P. mentions the reading वाक्यभेदेन योज्यम्.

## अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥

विशिष्टरूपोपादान उपस्थितार्थस्य विशेषणतयान्वयसंभवे त्यागे मा[illegible]भावो ऽस्या मूलम् । अत्रार्थः कल्पितान्वयव्यतिरेककाल्पितः शास्त्रीयो गृह्यत इति संख्यायाः [ ५. १. २२ ] इति सूत्रे भाष्ये स्पष्टम् ॥ वर्णग्रहणेषु नेति लस्य [ ३. ४. ७७ ] इत्यत्र भाष्ये स्पष्टम् । अत ए[illegible] विशिष्टरूपोपादानविषयेति वृद्धाः । एतन्मूलकमेव येन विधिः [ १. ७२ ] इत्यत्र भाष्ये पठ्यते ऽलैवानर्थकेन तदन्तविधिरिति ॥ किंच रूपम् [ १. १. ६८ ] इति शास्त्रे स्वशब्देनात्मीयवाचिनार्थो गृ[illegible] रूपशब्देन स्वरूपमेवं च तदुभयं शब्दस्य संज्ञीति तदर्थः । तत्र[illegible] न विशेष्यस्तत्र शास्त्रीयकार्यासंभवात्किंतु शब्दविशेषणम् । एवं चा[illegible] विशिष्टशब्दः संज्ञीति फलितम् । तेनैषा परिभाषा सिद्धेति भाष्ये स्[illegible]ष्टम् ॥ १४ ॥

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्रान्महतः [ ६. ३. ४६ ] इत्यात्त्वापत्तिर[illegible] आह ।

## गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ १५ ॥

गुणादागतो गौणः । यथा गोशब्दस्य जाड्यादिगुणनिमित्तो ऽ[illegible]

---

४ C. P. इयं वर्ण°; B. इयं च वर्ण°.

५ C. P. इत्यत्र भाष्ये; B. इति सूत्रे भाष्ये.

७ B. इति सूत्रभाष्ये.

८ C. °वाच्यर्थो.

९ B. तदुभयशब्दस्य; C. P. तदुभयं शब्दस्य; P. mentions the reading एतदुभयं शब्दस्य.

१० C. चार्थस्य विशिष्ट°.

वाहीकः। अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वान्मुख्यः प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते। एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्॥ तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव तत्र त्रिशब्दार्थस्येतरविशेषणत्वे ऽप्युक्तरूपगौणत्वाभावात्॥ किंचायं न्यायो न प्रातिपदिककार्ये किंतूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव। परिनिष्ठितस्य पदान्तरसंबन्धे हि गौर्वाहीक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रभावे बीजम्। श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादावत इञः द्रूप उपात्तमित्यादि। न च प्रातिपदिकपदं तादृशमिति वाच्यम्। तेन प्रातिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात्। तपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधा- ओत् [ १. १. १५ ] इत्यादावेतत्प्रवृत्त्या गोभवदित्यादौ दोषो ॥ अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य सदृशपरत्वे ऽन्तरङ्गत्वादीत्त्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमद्वयोर्द्वन्द्वे तन्नामकावित्यर्थके च न षत्वमाद्ये गौणलाक्षणिकत्वादन्त्ये सिद्धत्वात्। अत एवाग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्वणपरमग्नेः स्तुत्स्तोमसोमाः [ ८. ३. ८२ ] इति सूत्रस्थं भाष्यं संच्छते ॥ गां पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासंभवेन वि-

---

४ B. त्रिशब्दस्येतर॰.

१२ B. ॰पस्थिरिति.

१६ P. न षत्वमाद्ये; B. C. नेत्त्वषत्वे आद्ये; the latter reading is also mentioned by P.

१७ C. अप्रसिद्धत्वात्; B. अप्रसिद्धत्वाच्च.

भक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेणात्वं त्वं संपद्यते ऽमहान्महान्भूतस्त्वद्भवतीत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ॥ किंच शुक्लामित्युक्ते कर्म निर्दिष्टं कर्ता क्रिया चानिर्दिष्टे इत्याद्युक्तेरिदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्तैव कर्ताभ्याजैव क्रियेत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाऽध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यं सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि । एवमेतन्मूलको ऽभिव्यक्तपदार्था य इति श्लोको ऽपि कार्यविषयकः ॥ ध्वनितं चेदं सर्वादीनि [ १. १. २७ ] इति संज्ञाभूतानां प्रतिषेधमारभता वार्त्तिककृता पूर्वपर [ १. १. ३४ ] सूत्रे ऽसंज्ञायामिति वदता सूत्रकृतान्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च ॥ अथाश्रय एतदेवं भवति शब्दाश्रये च वृध्यात्त्वे इ

१ C. °गौणत्वप्रतीताव°; P. mentions B.'s reading.

२ B. P. गौणार्थकत्वस्य ग्रहेण; C. गौणार्थकत्वग्रहेण.

५ B. कर्तृ क्रिया चानिर्दिष्टे इत्युक्ते°.

६ B. and C. without Sandhi देवदत्त इत्यादौ, देवदत्त एव

७ B. °सूत्रभाष्येण.

११ C. P. एवमेतन्मूलको; B. अत एव तन्मूलको.

१२ B. P. सर्वादीनीति सूत्रे; C. सर्वादिसूत्रे.

१४ C. °कृतान्वर्थसंज्ञया; B. °कृता चान्वर्थसंज्ञया.

१५ C. P. एतदेवं भवति; B. एतदेव भवति.

त्सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायस्तद्रहितशब्दाश्रये च ते इत्यर्थो गोतः [ ७. १. ९० ] इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १५ ॥

अर्थवद्ग्रहणे [ प° १४ ] इत्यस्यापवादमाह ।

## अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥

येन विधिः [ १. १. ७२ ] इत्यत्र भाष्ये वचनरूपेण पठितैषा ॥ तेन राज्ञा साम्नेत्यादावल्लोपो दण्डी वाग्मीत्यादाविन्हन् [ ६. ४. १२ ] इति मः सुपयाः सुस्रोता इत्यादावत्वसन्तस्य [ ६. ४. १४ ] इति दीर्घः र्मा सुप्रथिमेत्यादौ मनः [ ४. १. ११ ] इति ङीब्निषेधश्च सिद्धः ॥ तु परिवेविषीढ्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणादिणः षीढ्वम् [ ८. ३. ] इत्यत्राङ्गग्रहणादर्थवत्परिभाषानित्या तन्मूलकमिदमित्याहुः ॥ विः [ ८. ३. ७९ ] इत्यत्रानर्थकस्यैव षीढ्वमः संभवादत्रापि तस्यैव गमिति भ्रमवारणायाङ्गादिति परे ॥ १६ ॥

ननूश्च [ १. २. १२ ] इत्यत्र लिङ्सिचौ [ १. २. ११ ] इत्यत आ- पदेष्वित्येव संबध्येतानन्तरत्वादत आह ।

## योगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥ १७ ॥

वाशब्द एवार्थे । परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इत्य-

---

३ C. °पोपादनस°.

७ C. इत्यत्र भाष्ये; B. इति सूत्रे भाष्ये.

८ C. P. °वल्लोपो; B. °वल्लोपौ.

१५ C. इत्यत आत्मने°; B. इत्यस्मादात्मने°.

१८ वाशब्द एवार्थे; P. mentions the reading वा एवार्थे.

१८ B. °निवृत्तिरित्यर्थः; C. °निवृत्तीत्यर्थः.

र्थः । एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः ॥ यत्त्वत्र ज्ञापकं नेड्वशि [ ७. २. ८ ] इत्यत इडित्यनुवर्तमान आर्धधातुकस्येट् [ ७. २. ३५ ] इत्यत्र पुनरिड्ग्रहणं तद्धि नेत्यस्यासंबन्धार्थमिति तन्न । दीधीवेवीटाम् [ १. १. ६ ] इति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणे ऽनुवर्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरोधात् । नञो निवृत्तिस्तु क्वचिदेकदेशो ऽप्यनुवर्तत इति न्यायेन सिद्धा ॥ वस्तुतस्तु दीधीवेवीटाम् [ १. १. ६ ] इति सूत्रस्थभाष्यमेकदेश्युक्तिः । आर्धधातुकस्य [ ७. २. ३५ ] इति सूत्रस्थेड्ग्रहणस्य नेड्वशि [ ७. २. ८ ] इति सूत्रे भाष्ये प्रत्याख्यानात् । तत्करणेन गुरुतरयत्नश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥

नन्वलुगधिकारः प्रागानङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनु पन्नमेकयोगनिर्दिष्टत्वात् । तथा दामहायनान्ताच्च [ ४. १. २७ ] इत्य संख्याव्ययादेः [ ४. १. २६ ] इत्यतः संख्यादेरित्यनुवर्तते ऽव्ययादे निवृत्तमिति चानुपपन्नमत आह ।

## क्वचिदेकदेशो ऽप्यनुवर्तते ॥ १८ ॥

एकत्रार्थे योगः संबन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दि योरित्यर्थ इति पक्षात्तिः [ ५ २. २५ ] इति सूत्रे कैयटः ॥ तावन्मात्रां स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम् ॥ स्पष्टा चेयं दामहायनान्ताच्च [ ४. १

---

१ C. लोके तथेव; B. तथैव लोके.

३ C. P. °हणं तद्धि नेत्यस्या°; B. om. तद्धि.

१३ C. संख्यादेरिति वर्तते.

१५ P. क्वचिदेकदेशो; B. C. एकयोगनिर्दिष्टानामेकदेशो.

१६ C. om. संबन्धः; but Kaiyata V, 2, 25 has this word.

१६ C. समुदायाभिद्वन्द्व°.

२७ ] इति सूत्र औतोऽम्शसोः [ ६. १. ९३ ] इति सूत्रे च भाष्ये
र्वा च ॥ १८ ॥.

ननु त्यदादीनामः [ ७. २. १०२ ] इत्यादिनेममित्याद्यावनुनासिकः स्यादत आह ।

भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥ ९

अणुदित्सूत्रे ऽप्रत्यय इत्यनेन सामर्थ्यात्सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुदकत्वेन च प्राप्तं नेत्यर्थः । अत एवाणुदित्सूत्रे प्रत्ययादेशागमेषु सग्रहणाभावं प्रकारान्तरेणोक्त्वैवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं त तज्ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन सवर्णाना ग्रहणं नेति ॥
त्र ज्याद ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादात् [ ६.४.१६० ] १०
दीर्घोच्चारणमस्या ज्ञापकम् ॥ अणुदित्सूत्रे ज्यादादिति सूत्रे च भास्पष्टैषा ॥ चोः कुः [ ८.२. ३० ] इत्यादौ भाव्यमानेनापि सवर्णणं विधेय उदिदुच्चारणसामर्थ्यात् । एतदेवाभिप्रेत्य भाव्यमानो ऽण्सन्न गृह्णातीति नव्याः पठन्ति ॥ १९ ॥
नन्वेवमदसो ऽसेः [ ८. २. ८० ] इत्यादिनाम् इत्यादौ दीर्घविधानं ११
स्यादत आह ।

भाव्यमानो ऽप्युकारः सवर्णान्गृह्णाति ॥ २० ॥

दिव उत् [ ६. १. १३१] ऋत उत् [६. १.१११ ] इति तपर-

---

१ P. इति सूत्रे च भाष्ये; C. इति सूत्रे भाष्ये; B. इति च भाष्ये.

६ अप्रत्यय इत्यनेन सामर्थ्यात्; P. mentions the reading अप्रत्यय इत्येतत्सामर्थ्यात्.

७ C. प्रत्ययागमादेशेषु.

करणमस्या ज्ञापकम् ॥ तित्स्वरितम् [ ६. १. १८५ ] इति सूत्रे भाष्ये स्पष्टैषा ॥ २० ॥

नन्नु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह ।

## वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

वर्णप्राधान्यविषयमेतत् । तत्त्वं च प्रत्ययलोपे [ १. १. ६२ ] इति सूत्रे स्थानिवत् [ १. १. ५६ ] इत्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम् । दे- वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं चेति तेन गोहितमित्यादावबादि न चित्रायां जाता चित्रेत्यादावण्यो ऽक स्तदन्तान्ङीबिति ङीप्न न ॥ इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्ता यलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥

नन्वतः कृकमि [८. ३. ४६] इत्यत्र कमिग्रहणेन सिद्धे कंसग्र व्यर्थमत आह ।

## उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

इदमेवास्या ज्ञापकमिति कैयटादयः । कंसेस्तु न कंसो ऽनभिधाना प्रत्ययस्य लुक् [१. १. ६१] इत्यादौ भाष्ये स्पष्टा ॥ ण्वुल्तृचौ [३.

२ C. स्पष्टैषा; B. स्पष्टेयम्

३ C. °लक्षणेनावाद्यादेशापत्ति°; B. °लक्षणेनावादेशाद्यापत्ति°

३* B. °पत्तिर आह.

८ C. °विशेष्यतानिरूपं च.

१० C. ङीम; B. P. ङीप्न न; P. says that some boo ommit न.

१६ प्रत्ययस्य लुक् इत्यादौ; P. says that युवोरनाकावित्यादौ is wrong reading.

१६ C. स्पष्टा; B. स्पष्टम्.

१३३] इत्यादौ भाष्ये व्युत्पन्नानीत्यपि । इदं शाकटायनादिरीत्या । पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम् ॥ आयनेयी [७.१.२] इति सूत्रे भाष्ये स्फुटमेतदेव ॥ २२ ॥

ननु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सनन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह ।

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २३ ॥

यस्मात्प्रत्ययविधिः [१. ४. १३] इति सूत्रे यस्मात्प्रत्ययविधिस्तदादि प्रत्यय इति योगो विभज्यते । गृह्यमाण उपतिष्ठत इति शेषः । तेन तदाद्यन्तांशः सिद्धः । तदन्तांशस्तु येन विधिः [ १. १. ७२ ] इत्यनेन सिद्धः । स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे ॥ यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति तन्न । इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासंभवात् ॥ यत्र प्रत्ययो

---

१ B. C. शाकटायनरीत्या; P. शाकटायनादिरीत्या.

२ P. स्फुटमेतदेव; B. C. स्फुटमेतत्.

३ C. देवदत्तादेः; B. P. देवादेः.

४ C. सनन्तत्वप्रयुक्त॰; B. सनन्तत्वादिप्रयुक्त॰.

९ P. तदाद्यन्तांशः; B. C. तदाद्यंशः.

१० C. इत्यनेन; B. इति सूत्रेण.

११ P. शब्दरूपं; B. C. शब्दस्वरूपं.

१२ B. ॰समुदायापेक्षात्त॰.

१२ C. om. तद्विशेषणत्वेन.

१२ P. तन्न । इयानित्यादौ; C. तन्न । इयानिरित्यादौ; B. तन्न । व्यतिस इयानित्यादौ.

निमित्तत्वेनाश्रीयते तत्र तदादीत्यन्तांशमात्रोपस्थितिरित्यङ्गस्य [६. ४. १] इति सूत्रे भाष्यकैयटयोः। एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते तत्रापि तदादीत्यन्तांशोपस्थितिः परंतु तत्र पञ्चम्यन्तता। अत एवैङ्ह्रस्वात् [६. १. ६९] इति सूत्र एङन्तादित्यर्थलाभः॥ अस्याः परिभाषायाः प्रयोजनान्तरं येन विधिः [१. १. ७२] इत्यत्र भाष्य उक्तम् परमगार्ग्यायण इति परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो न विशिष्टात्। निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव। अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः॥ प्रत्ययमात्रग्रहण एषा न तु प्रत्ययाप्रत्ययग्रहण इत्युगितश्च [४. १. ६] इति सूत्रे भाष्ये॥ इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा॥ २३॥

येन विधिः [१. १. ७२] इति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यते।

## प्रत्ययग्रहणे चापञ्चम्याः॥ २४॥

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्नेत्यर्थः। यथा रदाभ्यां निष्ठातो नः [८.२. ४२] इत्यत्र तेन दृषत्तीर्णेत्यादौ धातुतकारस्य न नत्वम्। तदन्तेत्यंशानुपस्थितावपि तदादि

१ C. तदादीत्यन्तांश°; B. तदादीत्यंश°.

२ B. भाष्यकैयटयोः स्पष्टम्।.

३ B. P. तत्रापि; C. तत्र.

३ C. तदादीत्यन्तांशोपस्थितिः; B. तदादीत्यंशोपस्थितिः.

३ B. om. तत्र.

५ C. इत्यत्र भाष्य; B. इति सूत्रे भाष्य.

९ C. इति सूत्रे भाष्ये; B. इत्यत्र भाष्ये.

११ C. इति सूत्रे; B. इति सूत्रे भाष्ये.

त्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थं इति न दोषस्तदंशानुपस्थितौ मानाभावात् । तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति दृषत्तीर्णेत्यादौ दोषः स्यादेव ॥ स्यतासी ललुटोः [३. १. ३३] इत्यादौ ललुटोः परयोरित्यर्थे नियमेनावधित्वाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यावधित्वेनान्वयान्न तदन्तविधिः ॥ ङ्याब्भ्यः [६. १ ६८] इत्यादौ तु न दोषस्तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात् ॥ अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव । अत एवोत्तभैकाभ्याम् [५. ४. ९०] इत्यादिनिर्देशाः संगच्छन्ते ॥ २४ ॥

नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ घरूप [ ६. ३ ४३ ] इति ह्रस्वापत्तिरत आह ।

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥

हृदयस्य हृल्लेखयदण्लासेषु [ ६. ३. ५० ] इत्यत्र लेखग्रहणात् । तत्र लेखेति न घञन्तमनभिधानात् । इयं च हृदयस्येति सूत्र एव भाष्ये स्पष्टा ॥ २५ ॥

---

तस्य C. P. रेफदान्तात्परस्य; B. रेफदकारान्तात्परस्य.

सम C. P. दोषस्तदंशानुपस्थितौ; B. दोषस्तदावंशानुपस्थितौ.

१ C °रित्यस्यावधि°; B. °रित्यस्यैवावधि°.

P. ङ्याब्भ्यः; B. C. हल्ङ्याब्भ्यः; P. mentions the latter reading.

१५ C. P. इत्यादौ तु न दोषः; B. इत्यादौ न दोषः.

१६ B. P. प्रत्ययविशेषणत्वाभावात्; C. °विशेषणताभावात्.

१७ C. P. अङ्गसंज्ञासूत्रे तु; B. अङ्गसंज्ञासूत्रेऽपि; P. mentions the latter reading.

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्र ष्यङः संप्रसारणं पुत्रपत्योः [ ६. १. १३ ] इति स्यादत आह ।

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

विषयसप्तमी । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह तत्र तदादिनियमो न । यस्त्वप्राधान्येनाह तत्र तदादिनियमो ऽस्त्येवेत्यर्थः । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम् । तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दस्यातिशब्दार्थं प्रत्युपसर्जनत्वे ऽपि तदर्थं प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः ॥ अत एवात्र परिभाषाया न शास्त्रीयमुपसर्जनत्वमसंभवात् ॥ अस्याः प्रत्ययग्रहणे [ प° २३ ] इत्यस्यापवादत्वात्तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपदसंबन्धेन स्त्रीप्रत्ययसामान्यग्रहणे विशेषग्रहणे च प्रवृत्तिर्न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे । ध्वनितं चेदमर्थवत्सूत्रे भाष्ये ॥ इयं च वाचनिक्येव ष्यङः [६. १. १३] इति सूत्रे भाष्ये स्पष्टा ॥ २६ ॥

नन्वेवं तरप्तमपौ घः [ १. १. २२ ] इत्यादिना तरबन्तादेः संज्ञा स्यादत आह ।

## संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७

सुप्तिङन्तम् [ १. ४. १४ ] इत्यन्तग्रहणमस्या ज्ञापकम् ॥ न च त्ययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसंभवाज्ज्ञापि ऽपि फलाभाव इति वाच्यम् । पदसंज्ञायाः स्वादिषु [ १. ४. १७ ] इ

---

७ C. °कुमारीशब्दस्याति°; B. °कुमारीशब्दार्थस्याति°.

९ C शास्त्रीयमुपसर्जनम°; B. शास्त्रीयोपसर्जनत्वम°.

१० B. इत्यस्यापवाद°; C. इत्यपवाद°.

११ P. विशेषग्रहणे च; B. C. विशेषग्रहणे वा; P. mention the latter reading.

विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् ॥ सुप्तिङन्तम् [१. ४. १४] इति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥

नन्ववतप्तेनकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह ।

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥

अस्याश्च कर्मणि क्तान्त उत्तरपदे ऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके गतिरनन्तरः [६. २. ४९] इति सूत्रे ऽनन्तरग्रहणं ज्ञापकम् । तच्चाभ्युद्धृतमित्यादावतिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तदर्थं सदस्या ज्ञापकम् ॥ न चाभ्युद्धृतमित्यादौ परत्वाद्गतिर्गतौ [८. १. ७०] इत्यनेनाभेर्निघात एवेति वाच्यम् । पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः ॥ अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्धृत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यत इति न दोषः ॥ न चाभ्युद्धृतमित्यादावभिना समासे ऽनन्तरस्योदः पूर्वपदत्वाभावे ऽपि स्वरार्थं तादिति वाच्यम् । कारकाद्दत्त [६. २. १४८] इति सूत्रे कारकादिति योगं विभज्य गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः । तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेव ॥ यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणमपिशब्दात्तद-

---

१ C. °ग्रहणत्वाभावात्; B. °ग्रहणाभावात्.

७ C. गतिरनन्तर इति सूत्रे; B. गतिरनन्तरसूत्रे.

१३ C. °स्योदः पूर्वपदत्वाभावेऽपि; B. °स्योदो ऽपूर्वपदत्वे ऽपि.

१४ C. इति सूत्रे कारकादिति; B. इति कारकादिति.

१५ C. विभज्य गतिग्रहण°; B. विभज्य तत्र गतिग्रहण°.

समभिव्याहृतस्य केवलस्यापीत्यर्थः । अन्यथानया कृद्ग्रहणविषये परत्वात्प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपिग्रहणम् ॥ अत एव सांकूटिनमिति गतिकारकोपपदानाम् [प° ७५] इति कृद्ग्रहण इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति न तु संकौटिनमितीति पुंयोगात् [४. १. ४८] इति सूत्रे भाष्योक्तं संगच्छते । अन्यथा तत्र केवलं कूटिन्नित्येतस्यापीनुणन्तत्वात्ततो ऽणि पाक्षिकदोषो दुर्वार एव स्यात् ॥ स्पष्टं चेदं सर्वं समासे ऽनञ्पूर्वे [७. १. ३७] इति सूत्रे भाष्यकैयटयोः ॥ गतिरनन्तरः [६. २. ४९] इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानात्तत्समवधाने ऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् ॥ इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च न तु कृदकृद्ग्रहण इत्यनुपसर्जनात् [४. १. १४] इति सूत्रे भाष्ये स्पष्टम् ॥ २८ ॥

## पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ २३ ॥

पदमङ्गं विशेष्यं विशेषणेन च तदन्तविधिः । येन विधिः [१.१.७२] इत्यस्यायं प्रपञ्चः । तेनेष्टकाचितं पक्वेष्टकचितमित्यादाविष्टकेषीकामालानां

---

१ P. केवलस्यापीत्यर्थः; C. B. °पीति तदर्थः; P. mentions the latter reading.

२ B. साकुटिनमिति.

५ C. इति सूत्रभाष्योक्तं.

६ C. कूटिन्नित्येतस्यापीनु°; B. कुटिन्नित्यस्यापीनु°.

७ B. P. चेदं सर्वं; C. om. सर्वं.

९ C. °विधानात्तत्समवधाने; B. °विधानात्समवधाने.

१२ C. तस्य तदन्तस्य च; B. तस्य च तदन्तस्य च; P. reads तस्य च as his remarks on Paribh. 30 show.

१३ C. विशेषणेन च तद°; B. om. च.

चित [६. ३. ६५] इति ह्रस्वो महान्परममहान्परमातिमहानित्यादौ सान्तमहतः [६. ४. १०] इति दीर्घः सिद्धः । अत एव तदुत्तरपदस्येति पाठो ऽयुक्त इति भाष्ये स्पष्टम् ॥ अत्र पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च ॥ पादस्य पदाज्याति [६. ३. ५२] इत्यत्र न तदन्तग्रहणं लक्ष्यानुरोधादिति सर्वं येन विधिः [१. १. ७२] इत्यत्र भाष्ये स्पष्टम् ॥ २९ ॥

नन्वेवमस्यापत्यमिरित्यादावदन्तप्रातिपदिकाभावादिञ्न स्यादत आह ।

## व्यपदेशिवदेकस्मिन् ॥ ३० ॥

निमित्तसद्भावाद्विशिष्टो ऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी । यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशो ऽसहायः स तेन तुल्यं वर्तते कार्यं प्रतीत्येकस्मिन्नसहाये ऽपि तत्कार्यं कर्तव्यमित्यर्थः । तेनाकारस्याप्यदन्तत्वान्न क्षतिः ॥ एकस्मिन्नित्युक्तेः सभासंनयन आकारस्य नादित्वं दरिद्राधाताविकारस्य नान्तत्वम् । अन्यथा सभासंनयने भव इत्यर्थे वृद्धाच्छः [४. २. ११४] दरिद्रातेरिवर्णान्तलक्षणो ऽञ्च स्यात् । अत एव हरिष्वित्यादौ सोः पदत्वं न । लोके ऽपि बहुपुत्रसत्त्वे नैकस्मिञ्ज्ये-

---

१ B. P. महान्परममहान्परमातिमहा°; C. महान्परममहानतिमहा°.

२ C. दीर्घः सिद्धः; B. दीर्घश्च सिद्धः.

७ B.C.P. नन्वेवमस्या°; P.mentions the reading नन्वेवमप्यस्या°.

९ C.P. मुख्यो व्यवहारो; B. मुख्यव्यवहारो.

१२ C.P. सभासंनयन आकारस्य; B. सभासंनयनाकारस्य.

१५ C. °सत्त्वे नैकस्मिञ्ज्ये°; B. °सत्त्व एकस्मिन्न ज्ये°.

ष्ठकनिष्ठत्वादिव्यवहारो ऽयं मे ज्येष्ठः कनिष्ठो मध्यम इति किंत्वेकपुत्रसत्त्व एव ॥ अनेन चाशास्त्रीयस्याप्यतिदेशः । अत एवेयायेत्यादावेकाच्त्वनिबन्धनाद्वित्वासिद्धिः । अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वमियानित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिध्यति । अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात् ॥ यत्तु यो ऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयायेत्यादावर्थवतो धातोरयं वर्णरूप एको ऽजिति कैयटस्तन्न तस्यैकपदर्गित्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात्। एकपदर्गित्यत्रार्थेन युक्तो व्यपदेश इति भाष्य उक्तम् । ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेको ऽवयव इत्यर्थ इति तदाशयः ॥ तस्मादेकस्मिंस्तत्तद्धर्मारोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहारो यथा च शिलापुत्रकस्य शरीरमित्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेणैतस्य शरीरमित्यादिव्यवहारस्तथात्रैकाच्त्वादिव्यवहारोपपत्तिरिति

---

१ C. ऽयं मे ज्येष्ठः कनिष्ठो मध्यम; B. ऽयमेव ज्येष्ठकनिष्ठमध्यम.

१ B. P. किंत्वेकपुत्रसत्त्व एव; C. किंत्वेकपुत्रत्व एव; P. mentions this reading.

२ C. °वेकाच्त्वनिबन्धन°; B. °वेकाज्निबन्धन°.

३ B.C. °ङ्गत्वं व्यतिस इत्यादौ स इत्यस्य पदत्वमियानि°; P. says that the words व्यतिसे—पदत्वम् are a wrong reading.

६ C. वर्णरूप एको; B. वर्ण एको.

७ B.C.P. मुख्यव्यवहारसत्त्वात्; P. mentions the reading मुख्यव्यवहारत्वात्.

९ C. शब्दमात्ररूपं; B. शब्दमात्रं रूपं.

११ B. शिलादपुत्रकस्य.

